॥ श्रीगणेशमहिम्नःस्तोत्रम् ॥

श्री गणेशाय नमः ।
अनिर्वाच्यं रूपं स्तवन-निकरो यत्र गलित-
स्तथा वक्ष्ये स्तोत्रं प्रथमपुरुषस्याऽत्र महतः ।
यतो जातं विश्वं स्थितमपि सदा यत्र विलयः
स कीदृग्गीर्वाणः सुनिगमनुतः श्रीगणपतिः ॥ १॥

गणेशं गाणेशाः शिवमिति च शैवाश्च विबुधा
रविं सौरा विष्णुं प्रथमपुरुषं विष्णुभजकाः ।
वदन्त्येके शाक्ता जगदुदयमूलां परिशिवां
न जाने किं तस्मै नम इति परं ब्रह्म सकलम् ॥ २॥

तथेशं योगज्ञा गणपतिमिमं कर्म निखिलं
समीमांसा वेदान्तिन इति परं ब्रह्म सकलम् ।
अजां सांख्यो ब्रूते सकलगुणरूपां च सततं
प्रकर्तारं न्यायस्त्वथ जगति बौद्धा धियमिति ॥ ३॥

कथं ज्ञेयो बुद्धेः परतर इयं बाह्यसरणिर्यथा
धीर्यस्य स्यात् स च तदनुरूपो गणपतिः ।
महत्कृत्यं तस्य स्वयमपि महान् सूक्ष्ममणुवद्
ध्वनिर्ज्योतिर्बिन्दुर्गगनसदृशः किं च सदसत् ॥ ४॥

अनेकास्योऽपाराक्षि- करचरणोऽनन्त-हृदयस्तथा
नानारूपो विविधवदनः श्रीगणपतिः ।
अनन्ताह्वः शक्त्या विविधगुणकर्मैकसमये
त्वसंख्यातानन्ताभिमत- फलदोऽनेकविषये ॥ ५॥

न यस्याऽन्तो मध्यो न च भवति चादिः सुमहतामलिप्तः
कृत्वेत्थं सकलमपि खंवत् स च पृथक् ।
स्मृतः संस्मर्तॄणां सकलहृदयस्थः प्रियकरो
नमस्तस्मै देवाय सकलसुरवन्द्याय महते ॥ ६॥

गणेशाद्यं बीजं दहन-वनिता-पल्लवयुतं
मनुश्चैकार्णोऽयं प्रणवसहितोऽभीष्टफलदम् ।
सबिन्दुश्चागाद्याङ्गणकऋषिछन्दोऽस्य च निचृत्
स देवः प्राग्बीजं विपदपि च शक्तिर्जपकृताम् ॥ ७॥

गकारो हेरम्बः सगुण इति पुनिर्गुणमयो
द्विधाऽप्येको जातः प्रकृतिपुरुषो ब्रह्म हि गणः ।
स चेशश्चोत्पत्ति-स्थिति- लयकरोऽयं प्रथमको
यतो भूतं भव्यं भवति पतिरीशो गणपतिः ॥ ८॥

गकारः कण्ठोर्ध्वं गजमुखसमो मर्त्यसदृशो
णकारः कण्डाधो जठरसदृशाकार इति च ।
अधोभाग ः कट्यां चरण इति हीशोऽस्य च तनु-
र्विभातीत्थं नाम त्रिभुवनसमं भूर्भुवःसुवः ॥ ९॥

गणेशेति त्र्यर्णात्मकमपि वरं नाम सुखदं
सकृत्प्रोच्चैरुच्चारितमिति नृभिः पावनकरम् ।
गणेशस्यैकस्य प्रतिजपकरस्यास्य सुकृतं
न विज्ञातो नाम्नः सकलमहिमा कीदृशविधः ॥ १०॥

गणेशेत्याह्वां यः प्रवदति मुहुस्तस्य पुरतः
प्रपश्यँस्तद्वक्त्रं स्वयमपि गणस्तिष्ठति तदा ।
स्वरूपस्य ज्ञानं त्वमुक इति नाम्नाऽस्य भवति
प्रबोधः सुप्तस्य त्वखिलमिह सामर्थ्यममुना ॥ ११॥

गणेशो विश्वेऽस्मिन् स्थित इह च विश्वं गणपतौ
गणेशो यत्रास्ते धृति- मतिरनैश्वर्यमखिलम् ।
समुक्तं नामैकं गणपतिपदं मंगलमयं
तदेकास्यं दृष्टेः सकल-विबुधास्येक्षण- समम् ॥ १२॥

बहुक्लेशैर्व्याप्तः स्मृत उत गणेशे च हृदये
क्षणात् क्लेशान् मुक्तोभवति सहसा त्वभ्रचयवत् ।
बने विद्यारम्भे युधि रिपुभये कुत्र गमने
प्रवेशे प्राणान्ते गणपतिपदं चाऽऽशु विशति ॥ १३॥

गणाध्यक्षो ज्येष्ठः कपिल अपरो मंगलनिधि-
र्दयालुर्हेरमबो वरद इति चिन्तामणिरजः ।
वरानीशो ढुण्ढिर्गजवदननामा शिवसुतो
मयूरेशो गौरीतनय इति नामानि पठति ॥ १४॥

महेशोऽयं विष्णुः सकविरविरिन्दुः कमलजः
क्षितिस्तोयं वह्निः श्वसन इति खं त्वद्रिरूदधिः ।
कुजस्तारः शुक्रो गुरुरुडुबुधोऽगुश्च धनदो

यमः पाशो काव्यः शनिरखिलरूपो गणपतिः ॥ १५॥

मुखं वह्निः पादौ हरिरपि विधाता प्रजननं
रविर्नेत्रे चन्द्रो हृदयमपि कामोऽस्य मदनः ।
करौ शक्रः कट्यामवनिरूदरं भाति दशनं
गणेशस्यासन् वै क्रतुमयवपुश्चैव सकलम् ॥ १६॥

अनर्ध्यालंकारैररुण-वसनैर्भूषित- तनुः
करीन्द्रास्यः सिंहासनमुपगतो भाति बुधराट् ।
स्थितः स्यात्तन्मध्येऽप्युदित- रविबिम्बोपम-रुचिः
स्थिता सिद्धिर्वामे मतिरितरगा चामरकरा ॥ १७॥

समन्तात्तस्यासन् प्रवरमुनिसिद्धाः सुरगणाः
प्रशंसन्तीत्यग्रे विविधनुतिभिः साऽञ्जलिपुटाः ।
बिडौजाद्यैर्ब्रह्मादिभिरनुवृतो भक्तनिकरै-
र्गणक्रीडामोद-प्रमुद-विकटाद्यैः सहचरै ः ॥ १८॥

वशित्वाद्यष्टाष्टादश-दिगखिलाल्लोलमनुवाग्
धृतिः पादूः खड्गोऽञ्जनरसबलाः सिद्धय इमाः ।
सदा पृष्ठे तिष्टन्त्यानिमिषिदृशस्तन्मुखलया
गणेशं सेवन्तेऽत्यतिनिकटसूपायनकराः ॥ १९॥

मृगांकास्या रम्भाप्रभृतिगणिका यस्य पुरतः
सुसंगीत कुर्वन्त्यपि कुतुकगन्धर्वसहिताः ।
मुदः पारो नाऽत्रेत्यनुपमपदे दोर्विगलिता
स्थिरं जातं चित्तं चरणमवलोक्यास्य विमलम् ॥ २०॥

हरेणाऽयं ध्यातस्त्रिपुरमथने चाऽसुरवधे
गणेशः पार्वत्या बलिविजयकालेऽपि हरिणा ।
विधात्रा संसृष्टावुरगपतिना क्षोणिधरणे
नरैः सिद्धौ मुक्तौ त्रिभुवनजये पुष्पधनुषा ॥ २१॥

अयं सुप्रासादे सुर इव निजानन्दभुवने
महान् श्रीमानाद्यो लघुतरगृहे रंकसदृशः ।
शिवद्वारे द्वाःस्थो नृप इव सदा भूपतिगृहे
स्थितो भूत्वोमांके शिशुगणपतिर्लालनपरः ॥ २२॥

अमुष्मिन् सन्तुष्टे गजवदन एवापि विबुधे

ततस्ते सन्तुष्टास्त्रिभुवनगताः स्युर्बुधगणाः ।
दयालुर्हेरम्बो न च भवति यस्मिंश्च पुरुषे
वृथा सर्वं तस्य प्रजननमतः सान्द्रतमसि ॥ २३॥

वरेण्यो भूशुण्डिर्भृगु-गुरु-कुजा-मुद्गलमुखा
ह्यपारास्तद्भक्ता जप-हवन-पूजा-स्तुतिपराः ।
गणेशोऽयं भक्तप्रिय इति च सर्वत्र गदितं
विभक्तिर्यत्रास्ते स्वयमपि सदा तिष्ठति गणः ॥ २४॥

मृदः काश्चिद्धातोश्छद- विलिखिता वाऽपि दृषदः
स्मृता व्याजान्मूर्तिः पथि यदि बहिर्येन सहसा ।
अशुद्धोऽद्धा द्रष्टा प्रवदति तदाह्वां गणपतेः
श्रुत्वा शुद्धो मर्त्यो भवति दुरिताद् विस्मय इति ॥ २५॥

बहिर्द्वारस्योर्ध्वं गजवदन-वर्ष्मेन्धनमयं
प्रशस्तं वा कृत्वा विविध कुशलैस्तत्र निहितम् ।
प्रभावात्तन्मूर्त्या भवति सदनं मंगलमयं
विलोक्यानन्दस्तां भवति जगतो विस्मय इति ॥ २६॥

सिते भाद्रे मासे प्रतिशरदि मध्याह्नसमये
मृदो मूर्तिं कृत्वा गणपतितिथौ ढुण्ढिसदृशीम् ।
समर्चन्त्युत्साहः प्रभवति महान् सर्व सदने
विलोक्यानन्दस्ताम् प्रभवति नृणां विस्मय इति ॥२७।
तथा ह्येकः श्लोको वरयति महिम्नो गणपतेः
कथं स श्लोके ऽस्मिन् स्तुत इति भवेत् सम्प्रपठिते ।
स्मृतं नामास्यैकं सकृदिदमनन्ताह्वयसमं
यतो यस्यैकस्य स्तवनसदृशं नाऽन्यदपरम् ॥ २८॥

गजवदन विभो यद्- वर्णितं वैभवं ते
त्विह जनुषि ममेत्थं चारु तद्दर्शयाशु ।
त्वमसि च करुणायाः सागरः कृत्स्नदाता-
अप्यति तव भृतकोऽहं सर्वदा चिन्तकोऽस्मि ॥ २९॥

सुस्तोत्रं प्रपठतु नित्यमेतदेव स्वानन्दं
प्रति गमनेऽप्ययं सुमार्गः ।
सचिन्त्यं स्वमनसि तत्पदारविन्दं
स्थाप्याग्रे स्तवनफलं नतीः करिष्ये ॥ ३०॥

गणेशदेवस्यं महात्म्यमेतद् यः श्रावयेद्वाऽपि पठेच्च तस्य ।
क्लेशा लयं यान्ति लभेच्च शीघ्रं स्त्री-पुत्र-
विद्यार्थ-गृहं च मुक्तिम् ॥ ३१॥

॥ इति श्रीपुष्पदन्तविरचितं श्रीगणेशमहिम्नः स्तोत्रं
सम्पूर्णम् ॥